# अथकारिलक्षणम्

अथ गानप्रारंभः

अग्निमीले अथा ते अन्तमानां युक्ष्वा हि केशिनायं ते स्तोम
उदुत्तमं वरुणाथान उभयेषामश्विना मधुमत्तमं व्यश्नुहि
तर्पया मूर्धा दिवोऽथाते अङ्गिरस्तं प्र सु विश्वान्रक्षसो
विद्मा हि त्वा पुरुवसुमसि सत्य ऋणयावा युक्ष्वा हि
वाजिनीवत्यग्नीषोमा हविषो वधैर्दुश्शंसान् गोजिता बाहू
त्वामुग्रमवसे य इन्द्राग्नी चित्रतमोऽश्रवं ह्युप ते स्तोमानथा
युवां युवं दधीचो द्वाविंशतिः १

प्र वः प्रसुज्येष्ठमदर्शि गातुरद्या देवान् पञ्चपादं पितरं प्रजां
त्वष्टाथा मन्दस्वार्वाञ्चमद्योदुष्य देवो वैश्वानर पृथुयाजस
ऋतस्य वा केशिना दश २

प्रयेऽति तृष्टं स यन्ता विप्रस्ताभिर्देवानां यस्त्वद्धोताग्ने
तृतीयेऽयं ते योनिरगच्छदु विप्रतमस्त्वं सद्यो अपिब
इन्द्र ओषधीर्जहि शत्रूनेदं बर्हिरुपप्रेतकुशिका
अवद्यमिव मन्यमानाथाब्रवीत्कया तच्छृण्वे क इमं
दशभिर्ममाथैतवाजाः किं मयः स्विदेकं वि चक्र
पुरुकुत्सानी हि वां विंशतिः ३

त्वामग्ने स्त्रियो हि दासे नहि ते पूर्तमक्षिपदिन्द्र पिब
तुभ्यमुपब्रह्माणि नः परि तृन्धि पाणीनां माकीर्नेशत् षट् ४

स्तुषे नरा क्रतुं ह्यस्य यदेददेवीरिमे सोमासो यद्द्रुह्यव्यनवि चत्वारि ५

य इन्द्र नहि वां नूनमथ विश्वेषामिरज्यन्तमग्निं न मा मथि तमपाधमदभिशस्तीर्मरुद्भिरिन्द्र सख्यमथैतादृक् सना च सोमाष्टौ ६

प्रणोऽच्छा हि सोमस्तवेमाः प्रजाः परिहिष्मा पुरुहूत आहि द्यावापृथिव्यति द्रव सारमेयौ बर्हिषदः पितरोऽग्निष्वात्ताः पितरो मैनमग्ने शृतं यदा गच्छाति यदा वज्रं वृक्षेवृक्षे द्वादश ७

प्र होता कूर्मस्त आयुरहरहर्जायत आबाह्वोर्द्वे ते चक्रे सुमङ्गलीरियं दैवी पूर्ति (रा च गच्छाद्)एह गमन् वज्रेण हि यावया वृक्यमर्वाग्देवा अथा हि वामहमस्मि सहमाना बृहस्पतिर्नयत्विति पञ्चदश ८

अथकारिणः

श्रीरामाय नमः

इत्यथकारिलक्षणं समाप्तम्

Reference:
Athakāri Lakṣaṇam, in C.K. Raja and K.M.K. Sarma, *Descriptive Catalogue of Sanskrit Manuscripts in the Adyar Library, Volume 1: Vedic,* Adyar Library and Research Center: Madras, 1942, p.204.